ॐ

## दश शान्तिः मन्त्राः

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रम:। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः।।1।।

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।।2।।

ॐ यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्सम्बभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय।। ॐ शान्तिः शान्तिः शान्तिः।।3।।

ॐ अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविण ँ सवर्चसम्। सुमेधा अमृतोऽक्षितः। इति त्रिशंकोर्वेदानुवचनम्।। ॐ शान्तिः शान्तिः शान्तिः।।4।।

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।। ॐ शान्तिः शान्तिः शान्तिः।।5।।

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु।। ॐ शान्तिः शान्तिः शान्तिः।।6।।

ॐ वाङ्मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम्। आविरावीर्म एधि। वेदस्य म आणीस्थः। श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। अवतु वक्तारम्।। ॐ शान्तिः शान्तिः शान्तिः।।7।।

ॐ भद्रं नो अपिवातय मनः॥ ॐ शान्तिः शान्तिः शान्तिः॥8॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यत्राः। स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्र्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ ॐ शान्तिः शान्तिः शान्तिः॥9॥

ॐ यो ब्रह्माणं विदधाति पूर्वं। यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥ ॐ शान्तिः शान्तिः शान्तिः॥10॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो महद्भ्यो नमो गुरुभ्यः। सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मि॥ ब्रह्मैवाहमस्मि॥

ॐ नारायणं पद्मभवं वशिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम्॥

श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्।
तं तोटकं वार्तिककारमन्यानस्मद् गुरून्सन्ततमानतोऽस्मि॥

श्रुतिस्मृतिपुराणानामालयं करुणालयम्। नमामि भगवत्पादं शङ्करं लोकशङ्करम्॥
शङ्करं शङ्कराचार्यं केशवं बादरायणम्। सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः॥
ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने। व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः॥
अशुभानि निराचष्टे तनोति शुभसन्ततिम्। स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं परम्॥
अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात्। स्मर्तृणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः॥

ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥
तस्मान्माङ्गलिकावुभौ॥

यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः।
व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणतोऽस्म्यहम्॥

॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति दश शान्तिः मन्त्राः ॥

# ✻ गुरुस्तुति ✻

विदिताखिलशास्त्रसुधाजलधे महितोपनिषत् कथितार्थनिधे।
हृदये कलये विमलं चरणं भव शंकर देशिक मे शरणम् ॥1॥

करुणावरुणालय पालय मां भवसागरदुःखविदूनहृदम्।
रचिताखिलदर्शनतत्त्वविदं भव शंकर देशिक मे शरणम् ॥2॥

भवता जनता सुखिता भविता निजबोधविचारण चारुमते।
कलयेश्वरजीवविवेकविदं भव शंकर देशिक मे शरणम् ॥3॥

भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता।
मम वारय मोहमहाजलधिं भव शंकर देशिक मे शरणम् ॥4॥

सुकृतेऽधिकृते बहुधा भवतो भविता पददर्शनलालसता।
अतिदीनमिमं परिपालय मां भव शंकर देशिक मे शरणम् ॥5॥

जगतीमवितुं कलिताकृतयो विचरन्ति महामहसश्छलतः।
अहिमांशुरिवात्र विभासि पुरो भव शंकर देशिक मे शरणम् ॥6॥

गुरुपुंगव पुंगवकेतन ते समतामयतां नहि कोऽपि सुधीः।
शरणागतवत्सल तत्त्वनिधे भव शंकर देशिक मे शरणम् ॥7॥

विदिता न मया विशदैककला न च किंचन काञ्चनमस्ति गुरो।
द्रुतमेव विधेहि कृपां सहजां भव शंकर देशिक मे शरणम् ॥8॥

✻✻✻✻✻